# ॥ श्रीराकिणीकेशवसहस्रनामस्तोत्रम् ॥

श्रीगणेशाय नमः ।
आनन्दभैरवी उवाच ।
कथयामि महाकाल परमाद्भुतसाधनम् ।
कुण्डलीरूपिणी देवी राकिण्याः कुलवल्लभ ॥ १॥

मानसं द्रव्यमानीय चाथवा बाह्यद्रव्यकम् ।
अनष्टहृष्टचित्तश्च पूजयेत् सावधानतः ॥ २॥

भक्त्या जपेन्मूलमन्त्रं मानसं सर्वमेव च ।
पूजयित्वा ततो जप्त्वा होमं कुर्यात् परामृतैः ॥ ३॥

समासैः पक्वनैवेद्यैः सुगन्धिकुसुमैस्तथा ।
स्वयम्भूकुसुमैनीत्यमर्घ्यं कृत्वा निवेदयेत् ॥ ४॥

सुमुखं पूजयेन्नित्यं मधुमांसेन शङ्कर ।
हुत्वा हुत्वा पुनर्हुत्वा प्राणवाय्वग्निसङ्गमैः ॥ ५॥

भ्रामयित्वा मनो बाह्ये स्थापयित्वा पुनः पुनः ।
पुनरागम्यगमनं कारयित्वा सुमङ्गलम् ॥ ६॥

वाचयित्वा सुवाणीभिर्याचयित्वा सवापिकम् ।
तर्पणं चाभिषेकञ्च केवलासवमिश्रितैः ॥ ७॥

मांसैर्मुद्रादिभिर्मत्स्यैः सारद्रव्यैः सपिष्टकैः ।
घृतादिसुफलैर्वापि यद् यदायाति कौलिके ॥ ८॥

अचलां भक्तिमाप्नोति विश्वामित्रो यथा वशी ।
तत्तद्द्रव्यैः साधकेन्द्रो नित्यं सन्तर्प्य सञ्जपेत् ॥ ९॥

एतन्मन्त्रं पाठित्वा च तर्पणञ्च समाचरेत् ।
तर्पणान्ते चाभिषेकं सदा कुर्याच्च तान्त्रिकः ॥ १०॥

मूलान्ते चाभिषिञ्चामि नमः स्वाहा पदं ततः ।
ततो हि प्रणमेद्भक्त्या अष्टाङ्गनतिभिः प्रभो ॥ ११॥

सहस्रनाम्ना स्तवनमष्टोत्तरसमन्वितम् ।

अर्धाङ्ग राकिणीयुक्तं राकिणीकेशवस्तवम् ॥ १२॥

शृणु तं सकलं नाथ यत्र श्रद्धा सदा तव ।
श्रवणार्थं बहूक्तं तत् कृपया ते वदाम्यह ॥ १३॥

एतत् श्रवणमात्रेण सर्वपापक्षयो भवेत् ।
राकिणीसङ्गमं नाथ स्तवनं नाम पावनम् ॥ १४॥

ये पठन्ति श्रद्धया चाश्रद्धया वा पुनः पुनः ।
तस्य सर्वः पापराशिः क्षयं याति क्षणादिह ॥ १५॥

काले काले महावीरो भवत्येव हि योगिराट् ।
संसारोत्तारणे युक्तो महाबलपराक्रमः ॥ १६॥

ॐ श्रीकृष्णो महामाया यादवो देवराकिणी ।
गोविन्दो विश्वजननी महाविष्णुर्महेश्वरी ॥ १७॥

मुकुन्दो मालती माला विमला विमलाकृतिः ।
रमानाथो महादेवी महायोगी प्रभावती ॥ १८॥

वैकुण्ठो देवजननी दहनो दहनप्रिया ।
दैत्यारिर्दैत्यमथिनी मुनीशो मौनभाविता ॥ १९॥

नारायणो जयकला करुणो करुणामयी ।
हृषीकेशः कौशिकी च केशवः केशिघातिनी ॥ २०॥

किशोरापि कैशोरी महाकाली महाकला ।
महायज्ञो यज्ञहर्त्री दक्षेशो दक्षकन्यका ॥ २१॥

महाबली महाबाला बालको देवबालिका ।
चक्रधारी चक्रकरा चक्राङ्गः चक्रमदीका ॥ २२॥

अमरो युवती भीमो भया देवो दिविस्थिता ।
श्रीकरो वेशदा वैद्यो गुणा योगी कुलस्थिता ॥ २३॥

समयज्ञो मानसज्ञा क्रियाविज्ञः क्रियान्विता ।
अक्षरो वनमाला च कालरूपी कुलाक्षरा ॥ २४॥

विशालाक्षो दीर्घनेत्रा जयदो जयवाहना ।
शान्तः शान्तिकरी श्यामो विमलश्याम विग्रहा ॥ २५॥

कमलेशो महालक्ष्मी सत्यः साध्वी शिशुः प्रभा ।
विद्युताकारवदनो विद्युत्पुञ्जनभोदया ॥ २६॥

राधेश्वरो राकिणी च कुलदेवः कुलामरा ।
दक्षिणो दक्षिणी श्रीदा क्रियादक्षो महालया ॥ २७॥

वशिष्ठगमनो विद्या विद्येशो वाक्सरस्वती ।
अतीन्द्रियो योगमाता रणेशी रणपण्डिता ॥ २८॥

कृतान्तको बालकृष्णा कमनीयः सुकामना ।
अनन्तो अनन्तगुणदा वाणीनाथो विलक्षणा ॥ २९॥

गोपालो गोपवनिता गोगोप कुलात्मजा ।
मौनी मौनकरोल्लासा मानवो मानवात्मजा ॥ ३०॥

सर्वाच्छिन्नो मोहिनी च मायी माया शरीरजा ।
अक्षुण्णो वज्रदेहस्था गरुडस्थो हि गारुडी ॥ ३१॥

सत्यप्रिया रुक्मिणी च सत्यप्राणोऽमृतापहा ।
सत्यकर्मा सत्यभामा सत्यरूपी त्रिसत्यदा ॥ ३२॥

शशीशो विधुवदना कृष्णवर्णो विशालधीः ।
त्रिविक्रमो विक्रमस्था स्थितिमार्गः स्थितिप्रिया ॥ ३३॥

श्रीमाधवो माधवी च मधुहा मधुसूदनी ।
वैकुण्ठनाथो विकला विवेकस्थो विवेकिनी ॥ ३४॥

विवादस्थो विवादेशी कुम्भकः कुम्भकारिका ।
सुधापानः सुधारूपा सुवेशो देवमोहिनी ॥ ३५॥

प्रक्रियाधारको धन्या धन्यार्थो धन्यविग्रहा ।
धरणीशो महानन्ता सानन्तो नन्दनप्रिया ॥ ३६॥

प्रियो विप्रियहरा च विप्रपूज्यो द्विजप्रिया ।
कान्तो विधुमुखी वेद्यो विद्या वागीश्वरोऽरुणा ॥ ३७॥

अकामी कामरहिता कम्रो विलचरप्रिया ।
पुण्डरीको विकुण्डस्था वैकुण्ठो बालभाविनी ॥ ३८॥

पद्मनेत्र पद्ममाला पद्महस्तोऽम्बुजानना ।
पद्मनाभिः पद्मनेत्रा पद्मस्थः पद्मवाहना ॥ ३९॥

वासुदेवो बृहद्गर्भा महामानी महाञ्जना ।
कारुण्यो बालगर्भा च आकाशस्थो विभाण्डजा ॥ ४०॥

तेजोराशिस्तैजसी च भयाच्छन्नो भयप्रदा ।
उपेन्द्रो वर्णजालस्था स्वतन्त्रस्थो विमानगा ॥ ४१॥

नगेन्द्रस्थो नागिनी च नगेशो नागनन्दिनी ।
सार्वभौमो महाकाली नगेन्द्रः नन्दिनीसुता ॥ ४२॥

कामदेवाश्रयो माया मित्रस्थो मित्रवासना ।
मानभङ्गकरो रावा वारणारिप्रियः प्रिया ॥ ४३॥

रिपुहा राकिणी माता सुमित्रो मित्ररक्षिका ।
कालान्त कलहा देवी पीतवासाम्बरप्रिया ॥ ४४॥

पापहर्ता पापहन्त्री निष्पापः पापनाशिनी ।
परानन्दप्रियो मीना मीनरूपी मलापहा ॥ ४५॥

इन्द्रनीलमणिश्यामो महेन्द्रो नीलरूपिणी ।
नीलकण्ठप्रियो दुर्गा दुर्गादुर्गतिनाशिनी ॥ ४६॥

त्रिकोणमन्दिरश्रीदो विमाया मन्दिरस्थिता ।
मकरन्दरसोल्लासो मकरन्दरसप्रिया ॥ ४७॥

दारुणारिनिहन्ता च दारुणारिविनाशिनी ।
कलिकालकुलाचारः कलिकालफलावहा ॥ ४८॥

कालक्षेत्रस्थितो रौद्री व्रतस्थो व्रतधारिणी ।
विशालाक्षो विशालास्या चमत्कारो करोद्यमा ॥ ४९॥

लकारस्थो लाकिनी च लाङ्गली लोलयान्विता ।

नाकस्थो नाकपदका नाकाक्षो नाकरक्षका ॥ ५०॥

कामगो नामसम्बन्धा सामवेदविशोधिका ।
सामवेदः सामसन्ध्या सामगो मांसभक्षिणी ॥ ५१॥

सर्वभक्षो रात्रभक्षा रेतस्थो रेतपालिनी ।
रात्रिकारी महारात्रिः कालरात्रो महानिशा ॥ ५२॥

नानादोषहरो मात्रा मारहन्ता सुरापहा ।
चन्दनाङ्गी नन्दपुत्री नन्दपालः विलोपिनी ॥ ५३॥

मुद्राकारी महामुद्रा मुद्रितो मुद्रिता रतिः ।
शाक्तो लाक्षा वेदलाक्षी लोपामुद्रा नरोत्तमा ॥ ५४॥

महाज्ञानधरोऽज्ञानी नीरा मानहरोऽमरा ।
सत्कीर्तीस्थो महाकीर्तीः कुलाख्यो कुलकीर्तीता ॥ ५५॥

आशावासी वासना सा कुलवेत्ता सुगोपिता ।
अश्वत्थवृक्षनिलयो वृक्षसारनिवासिनी ॥ ५६॥

नित्यवृक्षो नित्यलता क्लृप्तः क्लृप्तपदस्थितः ।
कल्पवृक्षो कल्पलता सुकालः कालभक्षिका ॥ ५७॥

सर्वालङ्कारभूषाढ्यो सर्वालङ्कारभूषिता ।
अकलङ्की निराहारा दुर्नीरीक्ष्यो निरापदा ॥ ५८॥

कामकर्ता कामकान्ता कामरूपी महाजवा ।
जयन्तो याजयन्ती च जयाख्य जयदायिनी ॥ ५९॥

त्रिजीवनो जीवमाता कुशलाख्यो विसुन्दरा ।
केशधारी केशिनी च कामजो कामजाड्यदा ॥ ६०॥

किङ्करस्थो विकारस्था मानसंज्ञो मनीषिणी ।
मिथ्याहरो महामिथ्या मिथ्यासर्गो निराकृति ॥ ६१॥

नागयज्ञोपवीतश्च नागमालाविभूषिता ।
नागाख्यो नागकुलपा नायको नायिका वधूः ॥ ६२॥

नायकक्षेमदो नारी नरो नारायणप्रिया ।
किरातवर्णो रासज्ञी तारको गुणतारिका ॥ ६३॥

शङ्कराख्योऽम्बुजाकारा कृपणः कृपणावती ।
देशगो देशसन्तोषा दर्शो दर्शनिवासिनी ॥ ६४॥

दर्शनज्ञो दर्शनस्था दृग् दृदिक्षा सुरोऽसुराः ।
सुरपालो देवरक्षा त्रिरक्षो रक्षदेवता ॥ ६५॥

श्रीरामसेवी सुखदा सुखदो व्यासवासिनी ।
वृन्दावनस्थो वृन्दा च वृन्दावन्यो महत्तनू ॥ ६६॥

ब्रह्मरूपी त्रितारी च तारकाक्षो हि तारिणी ।
तन्त्रर्थज्ञः तन्त्रविद्या सुतन्त्रज्ञः सुतन्त्रिका ॥ ६७॥

तृप्तः सुतृप्ता लोकानां तर्पणस्थो विलासिनी ।
मयूरा मन्दिररतो मथुरा मन्दिरेऽमला ॥ ६८॥

मन्दिरो मन्दिरादेवी निर्मायी मायसंहरा ।
श्रीवत्सहृदयो वत्सा वत्सलो भक्तवत्सला ॥ ६९॥

भक्तप्रियो भक्तगम्या भक्तो भक्तिः प्रभुः प्रभा ।
जरो जरा वरो रावा हविर्हेमा क्षमः क्षिति ॥ ७०॥

क्षोणीपो विजयोल्लासा विजयोजयरूपिणी ।
जयदाता दातृजाया बलिपो बलिपालिका ॥ ७१॥

कृष्णमार्जाररूपी च कृष्णमार्जाररूपिणी ।
घोटकस्थो हयस्था च गजगो गजवाहना ॥ ७२॥

गजेश्वरो गजाधारा गजो गर्जनतत्परा ।
गयासुरो गयादेवी गजदर्पो गजापीता ॥ ७३॥

कामनाफलसिद्ध्यर्थी कामनाफलसिद्धिदा ।
धर्मदाता धर्मविद्या मोक्षदो मोक्षदायिनी ॥ ७४॥

मोक्षाश्रयो मोक्षकर्त्री नन्दगोपाल ईश्वरी ।
श्रीपतिः श्रीमहाकाली किरणो वायुरूपिणी ॥ ७५॥

वाय्वाहारी वायुनिष्ठा वायुबीजयशस्विनी ।
जेता जयन्ती यागस्थो यागविद्या शिवः शिवा ॥ ७६॥

वासवो वासवस्थी च वासाख्यो धनविग्रहा ।
आखण्डलो विखण्डा च खण्डस्थो खण्डखञ्जनी ॥ ७७॥

खड्गहस्तो बाणहस्ता बाणगो बाणवाहना ।
सिद्धान्तज्ञो ध्वान्तहन्त्री धनस्थो धान्यवर्द्धीनी ॥ ७८॥

लोकानुरागो रागस्था स्थितः स्थापकभावना ।
स्थानभ्रष्टोऽपदस्था च शरच्चन्द्रनिभानना ॥ ७९॥

चन्द्रोदयश्चन्द्रवर्णा चारुचन्द्रो रुचिस्थिता ।
रुचिकारी रुचिप्रीता रचनो रचनासना ॥ ८०॥

राजराजो राजकन्या भुवनो भुवनाश्रया ।
सर्वज्ञः सर्वतोभद्रा वाचालो लयधातिनी ॥ ८१॥

लिङ्गरूपधरो लिङ्गा कलिङ्गः कालकेशरी ।
केवलानन्दरूपाख्यो निर्वाणमोक्षदायिनी ॥ ८२॥

महामेघगाढ महानन्दरूपा महामेघजालो महाघोररूपा ।
महामेघमालः सदाकारपाला महामेघमालामलालोलकाली ॥ ८३॥

वियद्व्यापको व्यापिका सर्वदेहे महाशूरवीरो महाधर्मवीरा ।
महाकालरूपी महाचण्डरूपा विवेकी मदैकी कुलेशः कुलेशी ॥ ८४॥

सुमार्गी सुगीता शुचिस्वो विनिता महार्को वितर्का सुतर्कोऽवितर्का ।
कृतीन्द्रो महेन्द्री भगो भाग्यचन्द्रा चतुर्थो महार्था नगः कीर्तीचन्द्रा ॥ ८५॥

विशिष्टो महेष्टिर्मनस्वी सुतुष्टिर्महाषड्दलस्थो महासुप्रकाशा ।
गलच्चन्द्रधारामृतस्निग्धदेहो गलत्कोटिसूर्यप्रकाशाभिलाषा ॥ ८६॥

महाचण्डवेगो महाकुण्डवेगी महारुण्डखण्डो महामुण्डखण्डा ।
कुलालभ्रमच्चक्रसारः प्रकारा कुलालो मलाका रचक्रप्रसारी ॥ ८७॥

कुलालक्रियावान् महाघोरखण्डः कुलालक्रमेण भ्रमज्ञानखण्डा ।

प्रतिष्ठः प्रतिष्ठा प्रतीक्षः प्रतीक्षा महाख्यो महाख्या सुकालोऽतिदीक्षा ॥ ८८॥

महापञ्चमाचारतुष्टः प्रचेष्टा महापञ्चमा प्रेमहा कान्तचेष्टा ।
महामत्तवेशो महामङ्गलेशी सुरेशः क्षपेशी वरो दीर्घवेशा ॥ ८९॥

चरो बाह्यनिष्ठा चरश्चारुवर्णा कुलाद्योऽकुलाद्या यतिर्योगवाद्या ।
कुलोकापहन्ता महामानहन्त्री महाविष्णुयोगी महाविष्णुयोगा ॥ ९०॥

क्षितिक्षोभहन्ता क्षितिक्षुब्धबाधा महार्घो महार्घा धनी राज्यकार्या ।
महारात्रि सान्द्रान्धकारप्रकाशो महारात्रि सान्द्रान्धकारप्रवेशा ॥ ९१॥

महाभीमगम्भीरशब्दप्रशब्दो महाभीमगम्भीरशब्दापशब्दा ।
कुला ज्ञानदात्री यमो यामयात्रा वशी सूक्ष्मवेशाश्वगो नाममात्रा ॥ ९२॥

हिरण्याक्षहन्ता महाशत्रुहन्त्री विनाशप्रियो बाणनाशप्रिया च ।
महाडाकिनीशो महाराकिणीशो महाडाकिनी सा महाराकिणी सा ॥ ९३॥

मुकुन्दो महेन्द्रो महाभद्रचन्द्रा क्षितित्यागकर्ता महायोगकर्त्री ।
हितो मारहन्त्री महेशेश इन्द्रा गतिक्षोभभावो महाभावपुञ्जा ॥ ९४॥

शशीनां समूहो विधोः कोटिशक्तिः कदम्बाश्रितो वारमुख्या सतीना ।
महोल्लासदाता महाकालमाता स्वयं सर्वपुत्रः स्वयं लोकपुत्री ॥ ९५॥

महापापहन्ता महाभावभर्त्री हरिः कार्तीकी कार्तीको देवसेना ।
जयाप्तो विलिप्ता कुलाप्तो गणाप्ता सुवीर्यो सभाषा क्षितीशोऽभियाता ॥ ९६॥

भवान् भावलक्ष्मीः प्रियः प्रेमसूक्ष्मा जनेशो धनेशी कृपो मानभङ्गा ।
कठोरोत्कटानां महाबुद्धिदाता कृतिस्था गुणज्ञो गुणानन्दविज्ञा ॥ ९७॥

महाकालपूज्यो महाकालपूज्या खगाख्यो नगाख्या खरः खड्गहस्ता ।
अथर्वोऽथर्वान्दोलितस्थः महार्था खगक्षोभनाशा हविः कूटहाला ॥ ९८॥

महापद्म मालाधृतो गाणपत्या गणस्थो गभीरा गुरुः ज्ञानगम्या ।
घटप्राणदाता घनाकाररूपा भयार्थोङबीजाङवारीङकर्ता ॥ ९९॥

भवो भावमाता नरो यामध्याता चलान्तोऽचलाख्या चयोऽञ्जालिका च ।
छलज्ञश्छलाढ्या छकारश्छकारा जयो जीवनस्था जलेशो जलेशा ॥ १००॥

जपञ्जापकारी जगज्जीवनीशा जगत्प्राणनाथो जगदाल्हादकारी ।
झरो झर्झरीशा झनत्कारशब्दो झनञ्झञ्जनानादझङ्काररावा ॥ १०१॥

ञचैतन्यकारी ञकैवल्यनारी हनोल्लासधारी टनत्टङ्कहस्ता ।
ठरेशो पविष्टश्ठकारादिकोटी डरो डाकिनीशो डरेशो डमारा ॥ १०२॥

ढमेशो हि ढक्का वरस्थानबीजो णवर्णा तमालतनुः स्थाननिष्ठा ।
थकारार्णमानस्थनिस्थोऽसंख्या दयावान् दयार्द्रा धनेशो धनाढ्या ॥ १०३॥

नवीनो नगेभागतीर्णाङ्गहारो नगेशी परः पारणी सादिपाला ।
फलात्मा फला फाल्गुनी फेणनाशः फलाभूषणाढ्या वशी वासरम्या ॥ १०४॥

भगात्मा भवस्त्री महाबीजमानो महाबीजमाला मुकुन्दः सुसूक्ष्मा ।
यतिस्था यशस्था रतानन्दकर्ता रतिर्लाकिनीशो लयार्थ प्रचण्डा ॥ १०५॥

प्रवालाङ्गधारी प्रवालाङ्गमाला हलोहालहेलापदः पादताला ।
वशीन्द्रः प्रकाशो वरस्थानवासा शिवः श्रीधराङ्गः शलाका शिला च ॥ १०६॥

षडाधारवासी षडाधारविद्या षडाम्भोजसंस्थः षडब्जोपविष्टा ।
सदा साधरोग्रोपविष्टाऽपरागी सुसूक्तापयस्था पलाश्रयस्थिता ॥ १०७॥

हरस्थोग्रकर्मा हरानन्दधारा लघुस्थो लिपिस्था क्षयीक्षुब्धक संख्या ।
अनन्तो निर्वाणाहराकारबीजा उरस्थोऽप्युरुस्था उरा ऊर्ध्वरूपा ॥ १०८॥

ऋचस्थो हि ॠगालसो दीर्घलृस्था त्वमेको हि चैम्बीजगुर्वी गुणस्था ।
सदौङ्कारवर्णा ह्सौंकारबीजा असङ्कारचन्द्रो ह्युसः कारवीरा ॥ १०९॥

हरीन्द्रो हरीशा हरिः कृष्णरूपा शिवो वेदभाषा च शौरिः प्रसङ्गा ।
गणाध्यक्षरूपी परानन्दभक्षा परेशो गणेशी रसो वासपूज्या ॥ ११०॥

चकोरि कुलप्राणबुद्धिस्थितिस्था स्वयं कामधेनुस्वरूपी विरूपा ।
श्रीहिरण्यप्रभः श्री हिरण्यप्रभाङ्गी प्रभातार्कवर्णोऽरुणाकारणाङ्गी ॥ १११॥

विभा कोटिधारा धराधार कोषा रणीशो प्रत्यादिकूटोऽधरो  धारणा शौरिरार्या ।
महायज्ञसंस्थो महायज्ञनिष्ठा सदाकर्मसङ्गः सदामङ्गरङ्गा ॥ ११२॥

किरातीपति राकिणी कालपुत्री शिलाकोट निर्माणदोहा विशाला ।
कलार्ककलस्थो कलाकिङ्किणीस्था किशोरः किशोरी कुरुक्षेत्रकन्या ॥ ११३॥

महालाङ्गलिश्री बलोद्धामकृष्णः कुलालादिविद्याऽभयो भावशून्या ।
महालाकिनी काकिनी शाकिनीशो महासुप्रकाशा परो हाकिनीशा ॥ ११४॥

कुरुक्षेत्रवासी कुरुप्रेममूर्ती र्महाभूतिभोगी महायोगिनी च ।
कुलाङ्गारकारो कुलाङ्गीशकन्या तृतीयस्तृतीयाऽद्वितीयोऽद्वितीया ॥ ११५॥

महाकन्दवासी महानन्दकाशी पुरग्रामवासी महापीठदेशा ।
जगन्नाथ वक्षः स्थलस्थो वरेण्या च्युतानन्दकर्ता रसानन्दकर्त्री ॥ ११६॥

जगद्दीपकलो जगद्दीपकाली महाकामरूपी महाकामपीठा ।
महाकामपीठस्थिरो भूतशुद्धि र्महाभूतशुद्धिः महाभूतसिद्धिः ॥ ११७॥

प्रभान्तः प्रवीणा गुरुस्थो गिरिस्था गलद्धारधारी महाभक्तवेषा ।
क्षणक्षुन्निवृत्तिनीवृत्तान्तरात्मा सदन्तर्गतस्था लयस्थानगामी ॥ ११८॥

लयानन्दकाम्या विसर्गाप्तवर्गो विशालाक्षमार्गा कुलार्णः कुलार्णा ।
मनस्था मनःश्रीः भयानन्ददाता सदा लाणगीता गजज्ञानदाता महामेरुपाया ॥ ११९॥

तरोर्मूलवासी तरज्ञोपदर्शा सुरेशः समेशः सुरेशा सुखी खड्गनिष्ठा ।
भयत्राणकर्ता भयज्ञानहन्त्री जनानां मखस्थो मखानन्दभङ्गा ॥ १२०॥

महासत्पथस्थो महासत्पथज्ञा महाबिन्दुमानो महाबिन्दुमाना ।
खगेन्द्रोपविष्टो विसर्गान्तरस्था विसर्गप्रविष्टो महाबिन्दुनादा ॥ १२१॥

सुधानन्दभक्तो विधानन्दमुक्तिः शिवानन्दसुस्थो विनानन्दधात्री ।
महावाहनाह्लादकारी सुवाहा सुरानन्दकारा गिरानन्दकारी ॥ १२२॥

हयानन्दकान्तिः मतङ्गस्थदेवो मतङ्गाधिदेवी महामत्तरूपः ।
तदेको महाचक्रपाणिः प्रचण्डा खिलापस्थलस्थोऽविहम्नीशपत्नी ॥ १२३॥

शिखानन्दकर्ता शिखासारवासी सुशाकम्भरी क्रोष्टरी वेदवेदीसुगन्धा ।
युगो योगकन्या दवो दीर्घकन्या शरण्यः शरण्या मुनिज्ञानगम्या सुधन्यः सुधन्या ॥
१२४॥

शशी वेदजन्या यमी यामवामा ह्यकामो ह्यकामा सदा ग्रामकामा ।
धृतीशः धृतीशा सदा हाटकस्थाऽ यनेशोऽयनेशी भकारो भगीरा ॥ १२५॥

चलत्खञ्जनस्थः खलत्खेलनस्था विवाती किराती खिलाङ्गोऽखिलाङ्गी ।
बृहत्खेचरस्थो बृहत्खेचरी च महानागराजो महानागमाला ॥ १२६॥

हकारार्द्धसंज्ञा वृतोहारमाला महाकालनेमिप्रहा पार्वती च ।
तमिस्रा तमिस्रावृतो दुःखहत्या विपन्नो विपन्ना गुणानन्दकन्या ॥ १२७॥

सदा दुःखहन्ता महादुःखहन्त्री प्रभातार्क वर्णः प्रभातारुणश्रीः ।
महापर्वतप्रेमभावोपपन्नो महादेवपत्नीशभावोपपन्ना ॥ १२८॥

महामोक्षनीलप्रिया भक्तिदाता नयानन्द भक्तिप्रदा देवमाता ॥ १२९॥

इत्येतत्कथितं नाथ महास्तोत्रं मनोरमम् ।
सहस्रनामयोगाऽङ्गमष्टोत्तरसमन्वितमम् ॥ १३०॥

यः पठेत् प्रातरुत्थाय शुचिर्वाशुचिमानसः ।
भक्त्या शान्तिमवाप्नोति अनायासेन योगिराट् ॥ १३१॥

प्रत्यहं ध्यानमाकृत्य त्रिसन्ध्यं यः पठेत् शुचिः ।
षण्मासात् परमो योगी सत्यं सत्यं सुरेश्वर ॥ १३२॥

अकालमृत्युहरणं सर्वव्याधिविनाशनम् ।
अपमृत्य्वादिहरणं वारमेकं पठेद्यदि ॥ १३३॥

पठित्त्वा ये न गच्छन्ति विपत्काले महानिशि ।
अनायासेन ते यान्ति महाघोरे भयार्णवे ॥ १३४॥

अकाले यः पठेन्नित्यं सुकालस्तत्क्षणाद्भवेत् ।
राजस्वहरणे चैव सुवृत्तिहरणादिके ॥ १३५॥

मासैकपठनादेव राजस्वं स लभेद् ध्रुवम् ।
विचरन्ति महावीराः स्वर्गे मर्त्ये रसातले ॥ १३६॥

गणेशतुल्यवलिनो महाक्रोधशरीरिणः ।
एतत्स्तोत्रप्रसादेन जीवन्मुक्तो महीतले ॥ १३७॥

महानामस्तोत्रसारं धर्माधर्मनिरूपणम् ।
अकस्मात् सिद्धिदं काम्यं काम्यं परमसिद्धिदम् ॥ १३८॥

महाकुलकुण्डलिन्याः भवान्याः साधने शुभे ।
अभेद्यभेदने चैव महापातकनाशने ॥ १३९॥

महाघोरतरे काले पठित्वा सिद्धिमाप्नुयात् ।
षट्चक्रस्तम्भनं नाथ प्रत्यहं यः करोति हि ॥ १४०॥

मनोगतिस्तस्य हस्ते स शिवो न तु मानुषः ।
योगाभ्यासं यः करोति न स्तवः पठ्यते यदि ॥ १४१॥

योगभ्रष्टो भवेत् क्षिप्रं कुलाचारविलङ्घनात् ।
कुलीनाय प्रदातव्यं न खल्वकुलेश्वरम् ॥ १४२॥

कुलाचारं समाकृत्य ब्राह्मणाः क्षत्रियादयः ।
योगिनः प्रभवन्त्येव स्तोत्रपाठात् सदामराः ॥ १४३॥

आनन्दभैरव उवाच
वद कान्ते रहस्यं मे मया सर्वञ्च विस्मृतम् ।
महाविषं कालकूटं पीत्त्वा देवादिरक्षणात् ॥ १४४॥

कण्ठस्थाः देवताः सर्वा भस्मीभूताः सुसम्भृताः ।
महाविषज्वालया च मम देहस्थदेवताः ॥ १४५॥

कैवल्यनिरताः सर्वे प्रार्थयन्ति निरन्तरम् ।
षट्चक्रं कथयित्वा तु सन्तोषं मे कुरु प्रभो ।
षट्चक्रभेदकथनममृतश्रवणादिकम् ॥ १४६॥

कथित्वा मम सन्तोषं कुरु कल्याणि वल्लभे ।
अमृतानन्दजलधौ सुधाभिः सिक्तविग्रहम् ॥ १४७॥

कृत्वा कथय शीघ्रं मे चायुषं परिवर्धय ।
आनन्दभैरवी उवाच
निगूढार्थ महाकाल कालेश जगदीश्वर ॥ १४८॥

भैरवानन्दनिलय कालकूटनिषेवण ।
इदानीं शृणु योगार्थ मयि संयोग एव च ॥ १४९॥

श्रुत्वा चैतत्क्रियाकार्यं नरो योगीश्वरो भवेत् ।
ममोद्भवः खेऽमले च सर्वाकारविवर्जीते ॥ १५०॥

भ्रूमध्ये सर्वदेहे च स्थापयित्वा च मां नरः ।
भाव्यते चापरिच्छन्नं ब्रह्मविष्णुशिवात्मकम् ॥ १५१॥

मम रूपं महाकाल सत्त्वरजस्तमः प्रियम् ।
केवलं रजोयोगेन शरीरं नापि तिष्ठति ॥ १५२॥

तथा केवलयोगेन तमसा नापि तिष्ठति ।
तथा केवलसत्त्वेन कुतो देही प्रतिष्ठति ।
अतस्त्रिगुणयोगेन धारयामि नवाङ्गकम् ॥ १५३॥

शनैः शनैः विजेतव्याः सत्त्वरजस्तमोगुणाः ।
आदौ जित्वा रजोधर्मं पश्चात्तामसमेव च ॥ १५४॥

सर्वशेषे सत्त्वगुणं नरो योगीश्वरो भवेत् ।
गुणवान् ज्ञानवान् वाग्मी सुश्रीर्धर्मी जितेन्द्रियः ॥ १५५॥

शुद्धनिर्मलसत्वं तु गुणमाश्रित्य मोक्षभाक् ।
सदा सत्त्वगुणाच्छन्नं पुरुषं काल एव च ॥ १५६॥

पश्यतीह न कदाचिज्जरामृत्युविवर्जीतम् ।
तं जनं परमं शान्तं निर्मलं द्वैतवर्जीतम् ॥ १५७॥

सर्वत्यागिनमात्मानं कालः सर्वत्र रक्षति ।
जले वा पर्वते वापि महारण्ये रणस्थले ॥ १५८॥

भूगर्त्तनिलये भीते संहारे दुष्टविग्रहे ।
सन्तिष्ठति महायोगी सत्यं सत्यं कुलेश्वर ॥ १५९॥

महायोगं शृणु प्राणवल्लभ श्रीनिकेतन ।
योगार्थं परमं ब्रह्मयोगार्थ परन्तपः ॥ १६०॥

ये जानन्ति महायोगं मिरयन्ते न च ते नराः ।
कृत्वा कृत्वा षड्दलस्य साधनं कृत्स्नसाधनम् ॥ १६१॥

ततः कुर्यान्मूलपद्मे कुण्डलीपरिचालनम् ।
मुहुर्मुहुश्चालनेन नरो योगीश्वरो भवेत् ॥ १६२॥

एकान्तनिर्मले देशे दुर्भीक्षादिविवर्जीते ।
वर्षमेकासने योगी योगमार्गपरो भवेत् ॥ १६३॥

पद्मासनं सदा कुर्याद् बद्धपद्मासनं तथा ।
महापद्मासनं कृत्वा तथा चासनमञ्जनम् ॥ १६४॥

तत्पश्चात् स्वस्तिकाख्यञ्च बद्धस्वस्तिकमेव च ।
योगाभ्यासे सदा कुर्यात् मन्त्रसिद्ध्यादिकर्मणि ॥ १६५॥

चक्रासनं सदा योगी योगसाधनकर्मणि ।
बद्धचक्रासनं नाम महाचक्रासनं तथा ॥ १६६॥

कृत्वा पुनः प्रकर्तव्यं बद्धयोगेश्वरासनम् ।
योगेश्वरासनं कृत्वा महायोगेश्वरासनम् ॥ १६७॥

वीरासनं ततः कुर्यात् महावीरासनं तथा ।
बद्धवीरासनं कृत्वा नरो योगेश्वरो भवेत् ॥ १६८॥

ततः कुर्यान्महाकाल बद्धकुक्कुटासनम् ।
महाकुक्कुटमाकृत्य केवलं कुक्कुटासनम् ॥ १६९॥

मयूरासनमेवं हि महामयूरमेव च ।
बद्धमयूरमाकृत्य नरो योगेश्वरो भवेत् ॥ १७०॥

एतत् सर्वं प्रवक्तव्यं विचार्य सुमनःप्रिय ।
अभिषेकप्रकरणे आसनादिप्रकाशकम् ॥ १७१॥

कथितव्यं विशेषेण इदानीं शृणु षट्क्रमम् ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ १७२॥

ततः परशिवो देवः षट्शिवाः षट्प्रकाशकाः ।
एतेषां षड्गुणानन्दाः शक्तयः परदेवताः ॥ १७३॥

षट्चक्रभेदनरता महाविद्याधिदेवताः ।
एतेषां स्तवनं कुर्यात् परदेवसमन्वितम् ॥ १७४॥

एतत्प्रकारकरणे यश्च प्रत्यहमादरात् ।
क्रियानिविष्टः सर्वत्र भावनाग्रहरूपधृक् ॥ १७५॥

स पश्यति जगन्नाथं कमलोपगतं हरिम् ।
आदौ हरेर्दर्शनञ्च कारयेद्येन कुण्डली ॥ १७६॥

ततो रुद्रस्य सञ्ज्ञायां लाकिन्याः शुभदर्शनम् ।
सर्वशः क्रमशो नाथ दर्शनं प्राप्यते नरः ॥ १७७॥

शनैः शनैर्महाकाल कैलासदर्शनं भवेत् ।
क्रमेण सर्वसिद्धिः स्यात् अष्टाङ्गयोगसाधनात् ॥ १७८॥

अष्टाङ्गसाधने काले यद्यत् कर्मं करोति हि ।
तत्सर्वं परियत्नेन शृणु सादरपूर्वकम् ।
तत्क्रियादिकमाकृत्य शीघ्रं योगी भविष्यति ॥ १७९॥

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे भैरवीभैरवसंवादे
श्रीराकिणीकेशवसहस्रनामस्तोत्रं सम्पूर्णम् ॥